कतरत् अतिकतरं ब्राह्मणकुलमिति।

त्यदादिविधौ च।

त्यदादिविधौ च प्रयोजनम्। अतिक्रान्तोयं ब्राह्मणस्तम् अतितद् ब्राह्मण इति।

सज्ञाप्रतिषेधस्तावन्न वक्तव्य। उपरिष्टाद् योगविभाग करिष्यते। 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्'। ततो'ऽसज्ञायाम्' इति। सर्वादीनीत्येव यान्यनुक्रान्तानि असज्ञाया तानि द्रष्टव्यानि।

उपसर्जनप्रतिषेधश्च न कर्तव्य। अनुपसर्जनादित्येष योग

सर्वनामसज्ञा न होने से सु और अम् के स्थान में अद्ड आदेश न होना प्रयोजन है। जैसे—अतिक्रान्तमिद ब्राह्मणकुलं कतरत्=अतिकतर ब्राह्मणकुलम्। यहां अतिकतरम् इस प्रादिसमास में कतर शब्द उपसर्जन है। अतिक्रान्त अर्थ मुख्य है। कतर शब्द के उपसर्जन होने से सर्वनाम सज्ञा न होगी तो अद्ड् आदेश नहीं होगा। त्यदादीनाम अ त्यदादि को अत्व कार्य का भी सज्ञा उपसर्जन बने हुए सर्वादि शब्दों की सर्वनाम सज्ञा न होने से रुक जाना प्रयोजन है। जैसे—अतिक्रान्तोऽयं ब्राह्मणस्तम्=अतितद् ब्राह्मण। यहां अतितद् इस प्रादिसमास में तद् शब्द उपसर्जन है। अतिक्रान्त अर्थ मुख्य है। तद् के उपसर्जन होने से सर्वनाम सज्ञा न होगी तो त्यदाद्यत्व न होगा।

सज्ञा की सर्वनामसज्ञा का निषेध कहने की तो कोई आवश्यकता नहीं। आगे सूत्र में योगविभाग करेंगे। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् यह एक सूत्र बनायेंगे। उस के बाद असज्ञायाम् यह दूसरा सूत्र होगा। उस का अर्थ होगा—सर्वादीनि सर्वनामानि से ले कर पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् तक कहे हुए सब सूत्रों के कार्य सज्ञाभिन्न में होते हैं। उस से सज्ञाविषयक सर्वादियों की सर्वनामसज्ञा न होगी।

उपसर्जन का निषेध कहने की भी आवश्यकता नहीं। आगे चतुर्थाध्याय में अनुपसर्जनात् यह सूत्र निष्प्रयोजन होने से खण्डित किया गया है[1] उस से यहां

१ यदि कहो कि स्त्रीप्रत्ययों में अनुपसर्जन अर्थात् प्रधान से तदन्तविधि का ज्ञापन करने के लिए अनुपसर्जनात् यह सूत्र रह सकता है जिस से कुरुचरी (कुरु चर्+ट टाप्) यहां टित्प्रत्ययान्त कुरुचर शब्द के अनुपसर्जन होने से टिड्ढाणञ्० सूत्र से ङीप् हो जाए और बहुकुरुचरा नगरी (बहवः कुरुचरा यस्यां सा नगरी) यहां कुरुचर के उपसर्जन होने से ङीप् न हो। अन्यथा ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति इस परिभाषा से तदन्तविधि का निषेध हो कर सूत्र में गृह्यमाण प्रातिपदिक से ही प्रत्यय हो

प्रत्याख्यायते तमेवमभिसंमन्त्स्यामः। अनुपसर्जन अ अदिति। किमिदम्

परिभाषा रूप से प्रयोजन लेंगे। अनुपसर्जनात् यह पञ्चमी ॥ मान कर अनुपसर्जन अ अत्=अनुपसर्जनात् इस प्रकार पदों का सम्बन्ध समझेंगे। अनुपसर्जन इस शब्द

सकेगा। टिड्ढाणञ् आदि प्रत्यया में भी प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणं भवति इस परिभाषा से अन्यूनानतिरिक्त प्रत्ययान्त का ही ग्रहण होगा, प्रत्ययान्त जिस के अन्त मे है उस का ग्रहण न होगा तो कौम्भकारेय यह रूप नहीं बन सकेगा। यहा कुम्भकार्या अपत्यम् इस अर्थ में कुम्भकारी शब्द का अवयव कार शब्द अण् प्रत्ययान्त है। उस से टिड्ढाणञ् सूत्र से ङीप् हो कर कारी यह स्त्री प्रत्ययान्त हुआ। कुम्भकारी यह समुदाय स्त्रीप्रत्ययान्त नहीं है। अपत्य अर्थ में स्त्रीभ्यो ढक् से स्त्रीप्रत्ययान्त से होने वाला ढक् प्रत्यय केवल कारी से हो सकेगा। ढक् परे रहते कारी ही अङ्ग होगा। आदिवृद्धि भी कारी को ही होगी कुम्भकारी को नहीं, तो कुम्भकारेय. ऐसा अनिष्ट रूप प्राप्त होगा। इस सूत्र से प्रधान में तदन्तविधि ज्ञापित कर देने पर टिड्ढाणञ्० सूत्र अण्णन्तान्त से भी ङीप् कर देगा तो केवल कार स ङीप् न हो कर कुम्भकार से भी हो जायगा। तब कुम्भकारी के स्त्रीप्रत्ययान्त हो जाने से ढक् हो जायगा। कुम्भ शब्द को आदिवृद्धि हो कर कौम्भकारेयः यह इष्ट रूप बन जायगा। यदि कोई कहे कि कौम्भकारेय तो अनुपसर्जनात् सूत्र के विना भी बन जायगा। क्योकि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण भवति इस परिभाषा से कृत् प्रत्यय के ग्रहण में कारक पूर्वक का भी ग्रहण होन से कार के साथ कुम्भकार भी अण्णन्त माना जायगा उस से ङीप् हो कर कुम्भकारी इस स्त्रीप्रत्ययान्त से ढक् होगा तो कुम्भ को आदि वृद्धि हो कर कौम्भकारेय बन जायगा सो ठीक नहीं। कृद्ग्रहण परिभाषा वहा लगती है जहा केवल कृत् का ही ग्रहण हो। जहा कृत् अकृत् दोनो का ग्रहण हो वहां उक्त परिभाषा नहीं लगती। टिड्ढाणञ्० सूत्र में जो अण्ग्रहण है वह केवल कृत्प्रत्यय का ही नहीं है अपितु तद्धित का भी है इस लिये केवल कृत् का ग्रहण न होने से कृद्ग्रहण परिभाषा नहीं लगेगी तो टिड्ढाणञ्० में कुम्भकार यह अण्णन्त न बन सकेगा। अण्णन्त न होने से ङीप् नहीं प्राप्त होगा। उस में तदन्तविधि से ङीप् करने के लिये अनुपसर्जनात् सूत्र की आवश्यकता है तो यह बात भी नहीं बनती। अनुपसर्जनात् सूत्र की फिर भी आवश्यकता नहीं। स्त्रीप्रत्यये चानुपसर्जने ॥ इस परिभाषा मे उपसर्जनभिन्न स्त्रीप्रत्यय में प्रत्ययग्रहण परिभाषोक्त तदादिनियम का निषेध होता है इस लिये कुम्भकार में यदि केवल अण्णन्त कार से भी ङीप् हो जाय तो भी ढक् प्रत्यय तो कुम्भकारी इस स्त्रीप्रत्ययान्तभिन्न समुदाय से भी हो जायगा। क्योंकि यह उपसर्जनभिन्न स्त्रीप्रत्यय है। उस में तदादिनियम के न होन से स्त्रीप्रत्ययान्त कारी से अतिरिक्त कुम्भ भी ले लिया जायगा तो कुम्भ को आदिवृद्धि हो कर कौम्भकारेयः यह इष्ट रूप बन जायगा।

द्यावापृथिवी द्यावापृथिव्यौ घृतवती दीप्तिमत्यौ उदकवत्यौ वा। 'घृतम्' इत्युदकनामसु पाठात्। भवत इति शेषः। भुवनानां भूतानाम् अभिश्रिया अभिश्रयणीये[1] भवत इति सर्वत्रानुसन्धेयम्। उर्वी विस्तीर्णे पृथ्वी बहुकार्यरूपेण प्रथिते च मधुदुघे मधुन उदकस्य दोग्ध्र्यौ सुपेशसा सुरूपे वरुणस्य सर्वस्य निवारकस्य धर्मणा धारणेन[2] विष्कभिते पृथग्धारिते अजरे नित्ये भूरिरेतसा बहुरेतस्के बहुकार्ये[3] वा भवतः। अत्र साक्षात् द्यावापृथिव्योः स्तुतिः प्रसङ्गात् वरुणस्येति द्रष्टव्यम्॥

असश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते।
राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम्॥ २॥

असश्चन्ती इति। भूरिधारे इति भूरिऽधारे। पयस्वती इति।
घृतम्। दुहाते इति। सुऽकृते। शुचिव्रते इति शुचिऽव्रते।
राजन्ती इति। अस्य। भुवनस्य। रोदसी इति।
अस्मे इति। रेतः। सिञ्चतम्। यत्। मनुःऽहितम्॥ २॥

असश्चन्ती असज्यमाने व्युदस्यन्त्यौ वा भूरिधारे बहुधारे। दिवो वृष्टिधाराः पृथिव्या अन्नयुक्तरसधाराः। एवमुभयोरपि बहुधारत्वम्[4]। पयस्वती उदकवत्यौ। तथा च यास्कः –'असज्यमाने इति वा व्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ' (निरु. ५. २) इति। शुचिव्रते शुचिकर्मिण्ये द्यावापृथिव्यौ सुकृते शोभनकारिणे यजमानाय घृतं सस्यादिसमृद्धिहेतुमुदकं दुहाते। अथ प्रत्यक्षस्तुतिः। रोदसी हे द्यावापृथिव्यौ अस्य भुवनस्य भूतजातस्य राजन्ती ईशाने युवाम् अस्मे अस्मासु रेतः प्रजननसमर्थं वीर्यं सिञ्चतम्। यत् रेतः मनुर्हितं मनुष्येभ्यो हितम्॥

यो वामृजवे क्रमणाय रोदसी मर्तो ददाश धिषणे स साधति।
प्र प्रजाभिर्जायते धर्मणस्परि युवोः सिक्ता विषुरूपाणि सव्रता॥ ३॥

यः। वाम्। ऋजवे। क्रमणाय। रोदसी इति। मर्तः। ददाश। धिषणे इति। सः। साधति।
प्र। प्रऽजाभिः। जायते। धर्मणः। परि। युवोः। सिक्ता। विषुऽरूपाणि। सऽव्रता॥ ३॥

धिषणे धृष्टे सर्वस्य भुवनस्य निवासभूते वा हे रोदसी वां युवाभ्यां यः मर्तः मर्त्यः ऋजवे क्रमणाय युवयोः सुखगमनाय ददाश हवींषि ददाति सः मर्त्यः साधति[5] कामान् साधयति। किंच प्रजाभिः पुत्रपौत्रादिभिः प्र जायते प्रवृद्धो भवति। धर्मणः कर्मणः परि उपरि युवोः युवयोः सिक्ता सिक्तानि रेतांसि विषुरूपाणि नानावर्णानि सव्रता समानकर्माणि भूतानि जायन्ते॥

---

१. ख-घ-त-न-भ-श—अभिश्रयणीयेन। २. य—धारकेन। ३. य—बहुकार्येति भाव.। ४. ख झ-न भ—बहुधारम्; श—बहुधार त्वम्। ५. ख-झ-न-भ— स साधति।

सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति।

यद्येवम् अतितद् अतितदौ अतितदः। इति अनं प्राप्नोति। तच्चापि वक्तव्यम्।

न वक्तव्यम्। इह तावद् 'डतरादिभ्यः पञ्चभ्यः' इति पञ्चमी। अङ्गस्येति षष्ठी। तत्राशक्यं भिन्नविभक्तित्वात् डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययात्। डतरादिभ्यो यो विहित इति। इहेदानीं 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्त

---

अङ्गाधिकार में ही जहां सप्तमी विभक्ति का निर्देश करके कार्य कहा है[1] वहां वह प्रकृत की विभक्ति में होता है। प्रकृत अर्थात् प्रस्तुत अधिकृत जो शब्द है उस के अर्थ वाली विभक्ति में कार्य होता है। तो प्रथमकल्प में अन्यपदार्थ विशेष्य अङ्गार्थ-सम्बन्धिनी टा विभक्ति परे होने पर भी अनङ् हो जायगा। यहां गृह्यमाण सक्थि शब्द के अर्थ की प्रधानता नहीं देखी जायगी।

तब तो अतितत् अतितदौ, अतितदः यहां अतिक्रान्तार्थ विशिष्ट अङ्ग के अर्थ की प्रधानता में भी त्यदादीनाम. से अत्व प्राप्त होता है। क्योंकि यहां भी विभक्तौ यह सप्तमी निर्देश है। और तमतिक्रान्तः=अतितत्। तावतिक्रान्तौ=अतितदौ। तमतिक्रान्ताः=अतितदः। इस प्रादिसमास में प्रकृत अतितद् इस अङ्ग के अर्थ की प्रधानता है। गृह्यमाण तद् शब्द के अर्थ की प्रधानता नहीं है। जहां भार अङ्गाधिकार में गृह्यमाण शब्द के अर्थ की प्रधानता में कार्य होता है ऐसा कहेंगे वहां सप्तमी निर्देश में अङ्गार्थ की प्रधानता में भी कार्य होता है यह बात भी कहनी होगी। ये दोनों बातें कहने में बहुत गौरव होगा।

कोई गौरव नहीं होगा। ये दोनो ही बातें नहीं कहेंगे। डतरादिभ्यः पञ्चभ्य में डतरादिभ्य यह पञ्चमी है। और अङ्गस्य के अधिकार से आने वाली अङ्गस्य यह षष्ठी है। दोनों के भिन्न विभक्ति होने से डतरादिभ्य यह पञ्चमी अङ्ग को विशेषित नहीं कर सकती। अर्थात् अङ्ग का विशेषण नहीं बन सकती। यहां सिवाय इस के कि डतरादिभ्य इस पञ्चमी को विहित प्रत्यय का विशेषण बनाया जाय और क्या किया जा सकता है। डतरादिभ्यः इस पञ्चमी का अर्थ है गा— डतरादि से विहित जो सु अम् उन को अद्ड् आदेश होता है। अब इस में क्या

---

१ अस्थि दधि० इस सूत्र में अनङ् आदेश पूर्वोक्त रीति से तृतीया आदिषु अजादिषु विभक्तिषु इस सप्तमी निर्देश से हुआ है।

२ तद् शब्द से व्यवहृत गृह्यमाण विभक्ति इस वचन का तात्पर्य है अपि शब्द सम्बन्धरहित सप्तमीनिर्देशे" इस वचन का समुत्पादक है।

इति। 'त्यदादीनामो भवती'ति। अस्थ्यादीनामित्येषा षष्ठी। अङ्गस्ये त्यपि त्यदादीनामित्यपि षष्ठी। अङ्गस्येत्यपि। तत्र कामचारः, गृह्यमाणेन वा विभक्तिं विशेषयितुमङ्गेन वा। यावता कामचारः, इह तावदस्थिदधिसक्थ्यक्ष्णामनङुदात्त इत्यङ्गेन विभक्तिं विशेषयिष्यामः। अस्थ्यादिभिरनङम्। अङ्गस्य विभक्तावनङ् भवति अस्थ्यादीनामिति। इहेदानीं त्यदादीनामो भवतीति गृह्यमाणेन विभक्तिं विशेषयिष्यामः। अङ्गेनाकारम्। त्यदादीनां विभक्तावो भवति। अङ्गस्येति।

से विहित सु अम् नहीं हैं अपि तु अतिकतर से विहित हैं इस लिये अद्ड् नहीं होगा।[1]

अस्थि दधि॰ और त्यदादीनाम् इन दोनों में भी देखिये। अस्थिदधिसक्थ्यक्ष्णाम् यह षष्ठी है। अङ्गस्य से अधिकृत अङ्गस्य यह भी षष्ठी है। त्यदादीनाम् यह षष्ठी है अङ्गस्य से अधिकृत अङ्गस्य यह भी षष्ठी है। दोनों के षष्ठ्यन्त होने पर हमारी मर्जी है चाहे हम गृह्यमाण शब्द से विभक्ति को विशेषित करें अर्थात् सूत्र में पठित शब्द से विहित विभक्ति में कार्य करें या प्रकृत अङ्ग से विभक्ति को विशेषित करें। जब मर्जी है तो हम अस्थिदधि॰ में अङ्ग से विभक्ति को विशेषित करेंगे। अनङ् को अस्थि आदि से विशेषित करेंगे। तब अर्थ होता है—अङ्ग से विहित टादि अजादि विभक्ति परे होने पर अस्थ्यादि शब्दों को अनङ् आदेश होता है। तो प्रियसक्थ्ना ब्राह्मणेन में सक्थि शब्द के गौण होने पर भी सक्थि वाले अङ्ग का अर्थ प्रधान होने से अनङ् हो जायगा। त्यदादीनाम् यहाँ गृह्यमाण शब्द से विभक्ति को विशेषित करेंगे। अङ्ग से अकार को विशेषित करेंगे। तब अर्थ होगा—त्यदादि शब्दों की (उन से विहित) विभक्ति परे होने पर अङ्ग (त्यदादि) को अ अन्तादेश होता है। फलितार्थ होगा—त्यदादि रूप जो अङ्ग उस को विभक्ति परे होने पर अकार होता है। तो अततत् में तद् रूप अङ्ग न होने से अकार नहीं होगा।[2]

---

१. जहां डतरादि के अर्थ की प्रधानता है वहां डतरादि से विहित ही प्रत्यय माना जायगा तो कतरत् के समान परमकतरत् में भी अद्ड् हो जायगा। अतिकतरम् में डतर के अर्थ की प्रधानता नहीं है इस लिये उस से विहित न माना जायगा तो अद्ड् नहीं होगा। डतरादिभ्य इस पञ्चमी को विहित विशेषण मानने पर अङ्गस्य यह षष्ठी भी पञ्चमी में परिणत हो जायगी तो अर्थ होगा—अङ्गसंज्ञक डतरादि से विहित सु अम् को अद्ड् होता है। ऐसा मानने में कहीं दोष न होगा।

२. जहां त्यदादि के अर्थ की प्रधानता है वहां तो त्यदादि रूप ही अङ्ग माना जायगा तो शोभनः सः=अतिसः। न सः=असः। न परः=अपरः। न कतरत्=अकतरत् इत्यादि में अकारादि हो जायेंगे। इसी बात को आगे शङ्का समाधान सहित कहेंगे।

यद्येवम् अतिसः। अत्वं न प्राप्नोति।

नैष दोषः। त्यदादिप्रधान एष समास।

अथवा नेदं संज्ञाकरणम्। पाठविशेषणमिदम्। सर्वेषां यानि नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते॥

यद्येवं संज्ञाश्रयं यत् कार्यं तन्न सिध्यति। सर्वनाम्नः स्मै। आमि सर्वनाम्नः सुडिति।

अन्वर्थग्रहणं तत्र विज्ञास्यते। सर्वेषां यन्नाम तत् सर्वनाम। सर्वनाम्न उत्तरस्य ङेः स्मै भवति। सर्वनाम्न उत्तरस्यामः सुड् भवति।

यद्येवं सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति। एतेषां चापि शब्दानामेकैकस्य स स विषयः। तस्मिंस्तस्मिन् विषये यो यः शब्दो वर्तते तस्य तस्य तस्मिंस्तस्मिन् वर्तमानस्य सर्वनामकार्यं प्राप्नोति।

---

यदि त्यदादीनामः सूत्र में गृह्यमाण शब्द त्यद् तद् आदि की विभक्ति परे होने पर अन्न त्यद् तद् आदि को अकार अन्तादेश मानते हैं तो शोभनः सः=अति सः यहां अत्व नहीं प्राप्त होता। क्योंकि यहां पूजावाची अति सहित अतितद् शब्द है। वह गृह्यमाण तद् शब्द नहीं है।

यह कोई दोष नहीं। इस अतितद् में गृह्यमाण तद् शब्द का ही अर्थ प्रधान है। त्यदादिप्रधान समास होने से अत्व हो जायगा।

अथवा सर्वनाम शब्द को संज्ञा न मान कर सर्वादि के गणपाठ का विशेषण मान लेंगे। सर्वेषां नाम सर्वनाम। जो सब के नाम हैं वे सर्वादि समझे जायेंगे। संज्ञा और उपसर्जन तो विशेष में अवस्थित होते हैं वे सब के नाम नहीं होते।

सर्वनाम शब्द को संज्ञा न मानने पर सर्वनाम्नः स्मै, आमि सर्वनाम्नः सुट् इत्यादि सर्वनामसंज्ञा से विहित कार्य नहीं सिद्ध होंगे? क्योंकि सर्वनाम को संज्ञा मानने पर ही सर्वनाम संज्ञा के आश्रित कार्य सिद्ध हो सकते हैं।

सर्वनाम्नः स्मै आदि में सर्वनाम शब्द अन्वर्थ समझा जायगा। जो सब का नाम है वह सर्वनाम है। उस से परे स्मै आदि होते हैं ऐसा अर्थ करेंगे।

तब तो सकल, कृत्स्न, जगत् इत्यादि शब्द भी सब के नाम होने से सर्वनाम बन जायेंगे। उन से परे भी स्मै आदि प्राप्त होंगे। न केवल उन्हीं से, बल्कि सर्वादि गणपठित शब्दों में भी एक २ का जो २ वह २ विषय है। उस २ विषय में वर्तमान जो २ शब्द है उन सब को सर्वनाम मान कर सर्वनाम के कार्य प्राप्त होंगे।

एवं तर्ह्युभयमनेन क्रियते। पाठश्चैव विशेष्यते संज्ञा च।

कथं पुनरेकेन यत्नेनोभयं लभ्यम्?

लभ्यमित्याह। कथम्। एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम्। सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां यानि च नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते।

---

जैसे—सर्वस्मिन् ओदने यहां सर्व शब्द ओदन का विशेषण है। ओदन विशेष्य है। दोनों एक दूसरे से अवगृहीत (क्रोडीकृत) हैं। समानाधिकरण होने से सर्व का विषय ओदन है और ओदन का विषय सर्व है। तो सर्व की तरह ओदन भी सर्व का नाम हो जाता है। इस लिये ओदन में भी सर्वनाम के कार्य प्राप्त होते हैं। इसी प्रकार घट पटादि सब शब्द जब सर्वादि के अर्थ में वर्तमान होंगे तब उन सबकी सर्वनामता प्राप्त होती है।

अच्छा तो सर्वनाम यह शब्द दोनों काम कर देगा। पाठ और संज्ञा दोनों का विशेषण बनेगा। सर्वादिगण पठित शब्द ही सर्वनाम संज्ञक होंगे और सब के नाम ही सर्वादि लिये जायेंगे।[1]

सर्वनाम इस एक शब्द से ये दोनों बातें कैसे सिद्ध होंगी?

सिद्ध हो जायेंगी। कैसे? सर्वादीनि सर्वनामानि यहां एकशेष का निर्देश मानेंगे। सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। इस प्रकार दो सर्वादि और दो सर्वनाम शब्दों में एक सर्वादि और एक सर्वनाम शब्द शेष रह गया है ऐसा समझेंगे।[3] एक सर्वादि शब्द गणपाठ का विशेषण है। दूसरा सर्वनाम संज्ञा का। वे ही सर्वादि हैं जो सर्व विश्व आदि ३५ शब्द गणपाठ में पठित हैं। और उन्हीं को सर्वनाम संज्ञा होती है। इसी प्रकार एक सर्वनाम शब्द अन्वर्थ नाम द्वारा सब के नाम का वाचक है। दूसरा सर्वनाम संज्ञा का। सब के जो नाम हैं वे सर्वादि हैं संज्ञा और उपसर्जन विशेष में अवस्थित रहते हैं इस लिये संज्ञा और उपसर्जन बने हुए सर्वादि शब्दों की सर्वनाम संज्ञा नहीं होगी।

---

१ एतेषां चापि। यह निर्धारण अर्थ में षष्ठी है। एतद् शब्द सर्वादि का परामर्शक है सकल कृत्स्न आदि का नहीं।

२ अर्थात् जो सर्व विश्व आदि शब्द सब के नाम न होंगे उन का सर्वादियों में अन्तर्भाव न होगा।

३ यद्यपि सहविवक्षा में एकशेष होता है। दो समान अर्थों को एक साथ

अथवा महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम्। अन्वर्थसंज्ञा यथा विज्ञायेत। सर्वादीनि सर्वनाम संज्ञानि भवन्ति। सर्वेषां नामानि इति चातः सर्वनामानि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते।

अथोभस्य सर्वनामत्वे कोऽर्थः?

उभस्य सर्वनामत्वेऽकजर्थं ।

उभस्य सर्वनामत्वेऽकजर्थः पाठः क्रियते। उभकौ।

किमुच्यतेऽकजर्थं इति। न पुनरन्यान्यपि सर्वनामकार्याणि।

---

अथवा सर्वनाम यह बहुत अक्षरों वाली बड़ी संज्ञा की गई है। और संज्ञा जहां तक हो छोटी से छोटी होनी चाहिये। जिस से छोटी और कोई न हो वह संज्ञा है। क्योंकि लाघव के लिये संज्ञा की जाती है। वहां बड़ी संज्ञा करने का यह प्रयोजन होगा कि वह अन्वर्थ संज्ञा समझी जाय। सर्वादि शब्दों की सर्वनाम संज्ञा होती है जो सर्वेषां नाम सर्वनाम इस अर्थ के अनुसार सब का नाम भी होती है। संज्ञा और उपसर्जन विशेष में अवस्थित होने के कारण सब के नाम नहीं होते इस लिये ये सर्वनामसंज्ञक न होंगे।

उभ शब्द की सर्वनामसंज्ञा का क्या प्रयोजन है?

उभ शब्द की सर्वनामसंज्ञा का अकच् होना प्रयोजन है। उभ शब्द को सर्वादिगण में इस लिये पढ़ा गया है कि उस की सर्वनाम संज्ञा हो कर उभकौ (अज्ञातौ उभौ=उभकौ) यहां अव्ययसर्वनाम्नामकच् प्राक् टेः सूत्र से अकच् प्रत्यय हो जाय। अन्यथा सामान्य प्रागिवीय क प्रत्यय प्राप्त होता है।

केवल अकच् के लिये ही उभ शब्द का सर्वादि में पाठ क्यों करते हो?

दोनों की इच्छा को सहविवक्षा कहते हैं। यहां सर्वादि और सर्वनाम दोनों में भिन्न २ दो अर्थ एक साथ विवक्षित हैं इस लिये सहविवक्षा के अभाव में एकशेष नहीं प्राप्त होता तो भी एकशेष न मानकर तन्त्र या आवृत्ति समझना चाहिये। दो अर्थों के कहने की इच्छा में शब्द का एक बार उच्चारण तन्त्र है। एक ही सर्वादि और सर्वनाम शब्द उन दोनों अर्थों वाला उच्चारण किया हुआ समझा जायगा। या सर्वादि और सर्वनाम शब्द की दो बार आवृत्ति करके उन दोनों अर्थ निकाल लिये जावेंगे।

अन्याभावो द्विवचनटाब् विषयत्वात् ।

अन्येषां सर्वनामकार्याणामभावः । किं कारणम् । द्विवचनटाब्विषयत्वात् । उभशब्दोऽयं द्विवचनटाब्विषयः । अन्यानि च सर्वनामकार्याणि एकवचनबहुवचनेषूच्यन्ते ।

यदा पुनरयमुभशब्दो द्विवचनटाब्विषय, क इदानीमस्यान्यत्र भवति ?

उभयोऽन्यत्र

उभयशब्दोऽस्यान्यत्र भवति । उभये देवमनुष्याः । उभयो मणिरिति ।

---

और भी तो बहुत से सर्वनामसंज्ञा के कार्य हैं जिन के लिये उभ शब्द का सर्वादि में पाठ कहा जा सकता है ।

सर्वनामसंज्ञा के अन्य कार्यों का उभ शब्द में संभव न होने से अभाव है । स्वभावतः उभ शब्द केवल द्विवचन में और टाप् प्रत्ययान्त ही प्रयुक्त होता है । स्त्रीलिङ्ग में होने वाला टाप भी द्विवचन में ही होगा । और सब सर्वनामसंज्ञा के कार्य एकवचन या बहुवचन में कहे गये हैं । इस लिये उभ शब्द में उन का संभव नहीं ।[1]

जब उभ शब्द केवल द्विवचन में और टाप् विषय में ही प्रयुक्त होता है तो अन्य वचनों में इस के स्थान में किस शब्द का प्रयोग होता है ?

अन्य वचनों में उभ शब्द के स्थान में उभय शब्द का प्रयोग होता है ।

---

१ उभादुदात्तो नित्यम् इस तद्धित वृत्ति वाले अयच् विधायक सूत्र में नित्य ग्रहण का यहां प्रयोजन है कि वृत्ति में उभय शब्द का ही प्रयोग हो उभ का न हो । उभ शब्द का प्रयोग तो द्व्यर्थाभिधान सामर्थ्य होने पर वाक्य की स्थिति में ही होगा । वृत्ति में अभेदैकत्व संख्या का भान होने से द्विवचन का अर्थ नहीं निकल सकता अतः वहां उभ शब्द का प्रयोग न हो कर उभय का ही प्रयोग होता है। जैसे—उभाभ्यां स्थानाभ्याम्=उभयत । उभयो स्थानयो =उभयत्र । ये ही रूप बनेंगे । उभत, उभत्र ये नहीं बनेंगे । ये अशुद्ध हैं । उभौ पुत्रौ यस्य स =उभयपुत्र होगा । उभपुत्र नहीं । उभाबाहवी इत्यादि तो द्विदण्ड्यादि गण में पठित होने से साधु मान लिये जायेंगे । उभशब्दोऽयम् इस प्रयोग में उभ का निर्देश करने के लिये ही अयच् नहीं हुआ है । अन्यथा उभयशब्दोऽयम् कहने से उभय शब्द की प्रतीति संभव थी ।

किं च स्याद् यद्यत्राकच् न स्यात् ?

कः प्रसज्येत ।

कश्चेदानीं काकचोर्विशेषः ।

'उभशब्दोऽयं द्विवचनटाब्विषय' इत्युक्तम् । तत्राकचि सति अकचस्तन्मध्यपतितत्वाच्छक्यत एतद् वक्तुं द्विवचनपरोऽयमिति । के पुनः सति नायं द्विवचनपरः स्यात् । तत्र द्विवचनपरता वक्तव्या ।

यथैव तर्हि के सति नायं द्विवचनपरः । एवं टाप्यपि सति नायं द्विवचनपरः स्यात् । तत्रापि द्विवचनपरता वक्तव्या ।

अवचनादपि तत्परविज्ञानम् ।

अन्तरेणापि वचनमापि द्विवचनपरोऽयं भविष्यति ।

---

उभय देवमनुष्या । उभयो मणिः[1] इसी प्रकार एतौ उभौ के स्थान में एतद् उभयम् का प्रयोग होगा ।

क्या हो जायगा यदि उभकौ में उभ शब्द से अकच् न हो तो ?

क प्रत्यय प्राप्त होगा ।

क और अकच में क्या भेद है ?

अभी कहा है कि उभ शब्द का केवल द्विवचन और टाप् ही प्रयोग का विषय है । यदि उभकौ में अकच होता है तो वह उभ का टि से पूर्व होगा । उभ के भकारोत्तरवर्ती अकार से पूर्व होने से तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इस परिभाषा के अनुसार वह उभ के ग्रहण से गृहीत हो जायगा तो उससे पर भी द्विवचन है यह कहा जा सकता है । क प्रत्यय तो प्रत्ययः परश्च के नियम से उभ से पर होगा । उभ के होने पर उभकौ में उभ से परे क प्रत्यय का व्यवधान होने के कारण अव्यवहित द्विवचन न रहेगा । वहाँ द्विवचनपरता कहना होगा । उभकौ में उभ से पर अव्यवहित द्विवचन के साधुत्व का विधान करना होगा ।

जैसे उभकौ में क प्रत्यय का व्यवधान होने से उभ से पर द्विवचन नहीं रहता वैसे उभे (उभ-टाप्-औ शी) यहाँ स्त्रीलिङ्ग में टाप् करने पर उसके व्यवधान में भी उभ से पर द्विवचन नहीं रहेगा । वहाँ भी किसी प्रकार द्विवचन पर बनाना होगा ।

टाप् में तो बिना वचन के ही उभ से परे द्विवचन हो जायगा ।

---

१ पीतलोहितावुभावयवौ यस्य स उभयो मणिः ।

**किं वक्तव्यमेतत् ?**

**नहि।**

**कथमनुच्यमानं गंस्यते ?**

**एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेन।**

अवचनादपि तत्परविज्ञानमिति चेत् केपि तुल्यम्।

**अवचनादपि तत्परविज्ञानमिति चेत् केपि अन्तरेण वचनं द्विवचनपरो भविष्यति। कथम्। स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति।**

---

क्या यह बात कहनी होगी ?

नहीं।

बिना कहे कैसे समझी जायगी ?

उभ शब्द के अकार के साथ टाप् का सवर्णदीर्घ एकादेश होगा तो अन्तादिवत् से टाप् को पूर्व के प्रति अन्तवत् मान कर उभ से सीधा परे द्विवचन हो जायगा। टाप् प्रत्यय स्वार्थ में होने से उभ शब्द के अर्थ में कोई व्यवधान नहीं डालेगा।

यदि टाप् में द्विवचन परे हो जायगा तो क प्रत्यय में भी यह बात तुल्य है। वहां भी बिना वचन के ही उभ से परे द्विवचन हो जायगा। कैसे ? क प्रत्यय भी स्वार्थिक है। प्रकृति के अर्थ को ही अभिव्यक्त करता है। स्वार्थिक प्रत्यय प्रकृति से अभिन्न होते हैं। प्रकृति के ग्रहण से उनका भी ग्रहण हो जाता है। तो उभ के ग्रहण से क प्रत्ययान्त 'उभक' भी गृहीत हो जायगा। तब उससे परे भी यह द्विवचन बन जायगा। ऐसी अवस्था में क और अकच् में कोई भेद नहीं रहता। उसके लिये उभ शब्द का सर्वादिगण में पाठ व्यर्थ है।[1]

---

१ इस प्रकार भाष्यकार तथा वार्तिककार दोनों ने उक्त प्रश्न का कोई उत्तर न देते हुए उभ शब्द का सर्वादि गण में पाठ व्यर्थ मान कर उसका खण्डन स्वीकार कर लिया है। बात ठीक भी है। उभकौ में क प्रत्यय करें चाहे अकच् करें दोनों में रूप और स्वर का कोई भेद नहीं। क प्रत्यय में प्रत्ययस्वर से और अकच् में चित्स्वर से उभकौ यह अन्तोदात्त रहेगा। हां, अवग्रह में भेद अवश्य है। क प्रत्यय में उभऽकौ ऐसा अवग्रह होगा। अकच् में उभकौ ऐसा। वहां भी न हि लक्षणेन पदकारा अनुवर्त्याः किं तर्हि पदकारैर्नाम लक्षणमनुवर्त्यम् इस भाष्यकार के वचन से पदपाठकारों के अनुसार अवग्रह नहीं करेंगे। अपितु जैसा अपना शास्त्र कहेगा वैसा अवग्रह होगा। अवग्रह करना हमारे अपने लक्षण के अधीन होगा तो हम क और अकच् में समानता लाने के लिये उभकौ में अवग्रह नहीं करेंगे।

## विभाषा दिक्समासे बहुव्रीहौ ॥१।१।२८॥

दिग्ग्रहणं किमर्थम् ?

**न बहुव्रीहाविति प्रतिषेधं वक्ष्यति। तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति। दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति। दिगुपदिष्टे विभाषा अन्यत्र प्रतिषेधः।**

---

दिक् शब्द का ग्रहण किस लिये किया है।

आगे न बहुव्रीहौ सूत्र से बहुव्रीहि समास में सर्वादियों की सर्वनाम संज्ञा का निषेध कहेंगे। दिग् ग्रहण के अभाव में यह नहीं जाना जायगा कि कौन से बहुव्रीहि में इस सूत्र से सर्वनाम संज्ञा का विकल्प है और कौन से में उस का सर्वथा निषेध है। क्योंकि विभाषा समासे बहुव्रीहौ इतना सूत्र होने पर सभी बहुव्रीहि समासों में विकल्प प्राप्त होगा। न बहुव्रीहौ से भी सभी बहुव्रीहि में निषेध प्राप्त होगा[1]। दिग् ग्रहण करने पर यह दोष नहीं रहेगा। दिक् ग्रहण से दोनों का विषयविभाग स्पष्ट हो जायगा कि दिगुपदिष्ट बहुव्रीहि में विकल्प होता है। उस से भिन्न बहुव्रीहि में निषेध होता है। जिस में दिक् शब्द का उपदेश है वह दिगुपदिष्ट बहुव्रीहि है। जैसे— दिङ्नामान्यन्तराले। दिक् समास वाले इसी बहुव्रीहि में सर्वनाम संज्ञा का विकल्प करने के लिये दिक् शब्द का ग्रहण किया है।

---

वृद्धाद्गोत्रात् से अपत्य अर्थ में फिञ् हो जाता है। भवन्तमञ्चति भवद्र्यङ्। यहां भवतु के सर्वनाम होने से विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये से भवत् की टि को अद्रि आदेश सिद्ध हो जाता है। भवतो विकारः भवन्मयः। यहां त्यदादीनि च से वृद्धसंज्ञा हो कर नित्यं वृद्धशरादिभ्य से मयट् हो जाता है। भवान् मित्रं यस्य स भवन्मित्रः। यहां भवतु के सर्वनाम होने से बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम् इस वार्तिक से भवतु का पूर्वनिपात हो जाता है। भवत इदं भावत्कम्। भवदीयम्। यहां भवतु की त्यदादीनि च से वृद्धसंज्ञा हो कर भवतष्ठक्छसौ से ठक्, छस् हो जाते हैं। आकडारीय सूत्र के भाष्य में सत्त्वप्रातिपदिक विषयक गुणवचनसंज्ञा से परे सर्वनाम संज्ञा पढ़ी गई है। वह पर होने के कारण गुणवचन संज्ञा को बाध देती है। भवतु के सर्वनामसंज्ञक होने से गुणवचनसंज्ञा की बाधा हो जायगी तो भवतो भावः इस अर्थ में गुणवचनब्राह्मणादिभ्यः कर्मणि च से प्राप्त ष्यञ् का अभाव सिद्ध हो जाता है। उससे भावत्यम् यह रूप न बन कर भवत्त्वम्, भवत्ता ये इष्ट रूप बन जाते हैं।

१. एक ही विषय में विकल्प और प्रतिषेध हो नहीं सकते। यदि पर होने

अथ समासग्रहणं किमर्थम् ?

समास एव यो बहुव्रीहिस्तत्र यथा स्याद्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। दक्षिणदक्षिणस्यै देहि।

अथ बहुव्रीहिग्रहणं किमर्थम् ?

द्वन्द्वे मा भूत्। दक्षिणोत्तरपूर्वाणामिति।

---

समासग्रहण किस लिये किया है।

समास सञ्जक (मुख्य) जो बहुव्रीहि है वहीं सर्वनाम संज्ञा का विकल्प हो, बहुव्रीहिवद्भाव से बहुव्रीहि माने हुए बहुव्रीहि में विकल्प न हो इस लिये समास ग्रहण किया है। जैसे दक्षिणदक्षिणस्यै देहि। यहां स्त्रीलिङ्ग दक्षिणा शब्द को आबाधे च से द्वित्व तथा बहुव्रीहिवद्भाव हुआ है। बहुव्रीहिवत् मानने से स्त्रियाः पुंवत्० से पुंवत् हो कर दक्षिणदक्षिणा बनता है। इस में बहुव्रीहि समास न होने से सर्वनाम संज्ञा का विकल्प न होगा तो सर्वादीनि सर्वनामानि से सामान्यप्राप्त सर्वनामसंज्ञा रह जायगी। उस से चतुर्थी के एकवचन में स्याट् आगम हो कर इष्ट रूप बन जाता है।

बहुव्रीहिग्रहण किस लिये किया है ?

द्वन्द्व समास में सर्वनाम संज्ञा का विकल्प न हो इस लिये बहुव्रीहि ग्रहण किया है। जैसे—दक्षिणोत्तरपूर्वाणाम्। दक्षिणा च उत्तरा च पूर्वा च=दक्षिणोत्तरपूर्वाः। तासां दक्षिणोत्तरपूर्वाणाम्। यहां द्वन्द्व समास में दक्षिणा उत्तरा शब्दों को सर्वनाम्नो वृत्ति मात्रे पुंवद्भावः इस वचन से पुंवत् हो कर दक्षिणोत्तरपूर्वा यह शब्द बनता है।[1] बहुव्रीहि न होने से विकल्प न होगा तो द्वन्द्वे च से नित्य सर्वनाम संज्ञा का निषेध हो कर आमि सर्वनाम्नः सुट् से सुट् नहीं होता।

---

से प्रतिषेध प्रवृत्त होगा तो विकल्प विधान व्यर्थ हो जायगा। यदि पूर्वविप्रतिषेध से विकल्प की प्रवृत्ति होगी तो प्रतिषेध विधि व्यर्थ हो जायगी, कारण कि विकल्प से सर्वथा की सिद्धि हो जायगी।

१. द्वन्द्वे च यह सूत्र निष्पन्न द्वन्द्व समास में ही सर्वादि की सर्वनाम संज्ञा का निषेध करता है। निष्पद्यमान द्वन्द्व समास के घटक अवयवों की सर्वनामसंज्ञा का निषेध नहीं करता इस लिये दक्षिणोत्तरपूर्वा शब्द के घटक अवयव दक्षिणा उत्तरा शब्दों के सर्वनाम होने से उन को पुंवत् होने में कोई बाधा नहीं है।

नैतदस्ति प्रयोजनम् । द्वन्द्वे चेति प्रतिषेधो भविष्यति ।

नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यते सा यथैव न बहुव्रीहा-वित्येतं प्रतिषेधं बाधते एवं द्वन्द्वे चेत्येतमपि बाधेत ।

न बाधेत । किं कारणम् । येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते न बहुव्रीहावित्येतस्मिन् प्रतिषेधे इयं विभाषा आरभ्यते । द्वन्द्वे चेत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च । अथवा 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति' यमियं विभाषा न बहुव्रीहावि-

---

यह कोई प्रयोजन नहीं । दक्षिणोत्तरपूर्वाणाम् में इस विकल्प को बाध कर द्वन्द्वे च से नित्य निषेध हो जायगा ।

निषेध की अवश्य प्राप्ति में यह विकल्प कहा गया है । वह जैसे न बहुव्रीहौ इस निषेध को बाधता है वैसे बाध्यसामान्य चिन्ता पक्ष को ले कर द्वन्द्वे च इस निषेध को भी बाध लेगा । न प्राप्त=अप्राप्त । न अप्राप्त=नाप्राप्त । अर्थात् अवश्यमेव प्राप्त ।

नहीं बाध सकता । क्योंकि येन नाप्राप्त न्याय से बाधा होगी । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति यह परिभाषा पहले दीर्घाद्वीटाम् आदि सूत्रों के भाष्य में भी आ चुकी है । उस से जिस की अवश्य प्राप्ति में इस सूत्र का आरम्भ है उसी निषेध को यह बाधेगा । जिस की किसी अंश में प्राप्ति किसी में अप्राप्ति होने से निश्चित अवश्य प्राप्ति नहीं है उसे नहीं बाधेगा । न बहुव्रीहौ की तो निश्चित अवश्य प्राप्ति है । क्योंकि उस निषेध का कहीं विकल्प नहीं है । वह सारे त्रिकबहुव्रीहि को व्याप्त करता है । द्वन्द्वे च यह निषेध तो सारे दिग्द्वन्द्व को व्याप्त नहीं करता क्योंकि विभाषा जसि द्वारा जस् अंश में विकल्प कहा गया है । इस लिये वह अवश्य प्राप्त नहीं है । किं च, यदि यह सूत्र द्वन्द्वे च निषेध को बाध कर उस में विकल्प करे तो जस् अंश में यह विभाषा जसि विभाषा का अनुवादमात्र रह जायगी (यह दोष भी होगा) अतः दक्षिणोत्तरपूर्वाणाम् इस द्वन्द्व में यह विकल्प न हो कर द्वन्द्वे च सूत्र से नित्य सर्वनाम संज्ञा का निषेध ही होगा तो बहुव्रीहि ग्रहण की कोई आवश्यकता नहीं । अथवा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इस परिभाषा से यह सूत्र अपने से अनन्तर अव्यवहित आने वाले न बहुव्रीहौ इस निषेध को ही बाधेगा । व्यवहित हो कर बाद में आने वाले द्वन्द्वे च इस निषेध को नहीं बाधेगा । परिभाषा का अर्थ है—सूत्र पाठ में पहले पढ़े हुए अपवादसूत्र अपने से अनन्तर आने वाली विधि को ही बाधते हैं ।

त्येतं प्रतिषेधं बाधिष्यते, द्वन्द्वे चेत्येतं प्रतिषेधं न बाधिष्यते। अथवा इदं तावदयं प्रष्टव्यः, इह कस्मान्न भवति या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूर्वोत्तर उन्मुग्धः। तस्मै पूर्वोत्तराय देहीति। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति'। यद्येवं नार्थो बहुव्रीहिग्रहणेन। द्वन्द्वे कस्मान्न भवति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।

उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम्।

न कर्तव्यम्। क्रियते तत्रैव न बहुव्रीहाविति।

द्वितीयं कर्तव्यम्। बहुव्रीहिरेव यो बहुव्रीहिस्तत्र यथा स्याद्,

---

व्यवहित होकर बाद में आने वाली विधि को नहीं बाधते[1] अथवा—दक्षिणोत्तरपूर्वाणाम् यहां द्वन्द्व में इस विकल्प की प्राप्ति की शङ्का करने वाले इस व्यक्ति से यह पूछना चाहिये कि—या पूर्वा सा उत्तरा अस्य उन्मुग्धस्य स पूर्वोत्तरः उन्मुग्धः। तस्मै पूर्वोत्तराय देहि। यहां पूर्वोत्तर इस दिक्समास बहुव्रीहि में इस सूत्र से सर्वनामसंज्ञा का विकल्प क्यों नहीं होता तो वह यही उत्तर देगा कि इस सूत्र में प्रतिपदोक्त दिङ्नामान्यन्तराले सूत्र वाला दिक् समास बहुव्रीहि लिया गया है। पूर्वोत्तर में दिक् समास लाक्षणिक है। प्रतिपदोक्त दिङ्नामान्यन्तराले से विहित बहुव्रीहि नहीं है इस लिये लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं भवति इस परिभाषा के अनुसार प्रतिपदोक्त के ग्रहण में लाक्षणिक का ग्रहण नहीं होगा तो यहां लाक्षणिक होने से यह विकल्प नहीं होता है तो उसी परिभाषा के अनुसार दक्षिणोत्तरपूर्वाणाम् में भी विकल्प नहीं होगा। इस लिये बहुव्रीहि ग्रहण की कोई आवश्यकता नहीं। दक्षिणोत्तरपूर्वाणाम् में लाक्षणिक दिक्समास द्वन्द्व है। प्रतिपदविहित दिङ्नामान्यन्तराले वाला बहुव्रीहि समास नहीं है।

अच्छा तो न बहुव्रीहौ इस उत्तर सूत्र के लिये यहां बहुव्रीहिग्रहण कर देना चाहिये।

कोई आवश्यकता नहीं। वहां न बहुव्रीहौ में बहुव्रीहिग्रहण कर ही रखा है।

दूसरा बहुव्रीहिग्रहण कर देना चाहिये। जिस से समास जो बहुव्रीहि है अर्थात् जो मुख्य बहुव्रीहि है, वहीं सर्वनाम संज्ञा का निषेध हो। बहुव्रीहिवत् मान कर जो बहुव्रीहि है वहां सर्वनाम संज्ञा का निषेध न होवे। जैसे—एैकान्ये देहि।

---

[1] १. अनन्तर विधि को बाधने में चरितार्थ हो जाने से व्यवधान से आने वाली उत्तर विधियों को नहीं बाधते।

बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्। एकैकस्मै देहि।

एतदपि नास्ति प्रयोजनम्। समास इति वर्तते तेन बहुव्रीहिं विशेषयिष्यामः। समासो यो बहुव्रीहिरिति।

इदं तर्हि प्रयोजनम्। अवयवभूतस्यापि बहुव्रीहेः प्रतिषेधो यथा स्यात्। इह मा भूत्। वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः। वसनमन्तरमेषां [redacted] इमे वसनान्तराः। वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः।

---

यहां एक शब्द को एक बहुव्रीहिवत् से द्वित्व तथा बहुव्रीहिवद्भाव हुआ है। बहुव्रीहिवत् मानने से सुप् का लुक् हो जाता है। इस में बहुव्रीहि समास नहीं है इस लिये न बहुव्रीहौ से निषेध न होगा तो सर्वनाम्नः स्मै से ङे को स्मै हो जाता है।

यह भी कोई प्रयोजन नहीं। इस सूत्र से वहां समास की अनुवृत्ति चली जायगी। उस से बहुव्रीहि का सम्बन्ध हो कर बहुव्रीहि समास ही समझा जायगा।

अच्छा तो फिर इस बहुव्रीहिग्रहण का उत्तर सूत्र में ही यह प्रयोजन है कि अवयवभूत बहुव्रीहि को भी बहुव्रीहि मान कर उसमें न बहुव्रीहौ से सर्वनामसंज्ञा का निषेध हो जावे। अर्थात् बहुव्रीहि समासमात्र में चाहे वह स्वतन्त्र बहुव्रीहि हो या किसी अन्य समास का अवयव हो सब में सर्वनाम संज्ञा का निषेध होवे। जैसे—वस्त्रमन्तरमेषां ते वस्त्रान्तराः। वसनमन्तरमेषां ते वसनान्तराः। वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः। यहां बहुव्रीहिगर्भ द्वन्द्वसमास में द्वन्द्व की मुख्यता है। बहुव्रीहि उसका अवयव है। तो भी बहुव्रीह्याश्रित सर्वनामसंज्ञा का नित्य निषेध हो जाने से जस् शी से शीभाव नहीं हुआ। अनुवृत्त बहुव्रीहिग्रहण के सामर्थ्य से द्वन्द्व में प्राप्त विभाषा जसि की भी बाधा हो गई।[2]

---

१. वसन शब्द का यहां गृह अर्थ है, अन्तर शब्द का बाह्य अर्थ है।

२. उपसर्जन की सर्वनामसंज्ञा का निषेध वार्त्तिककार ने कहा है। सूत्रकार आचार्य पाणिनि ने ऐसा वचन स्वयं नहीं कहा है। इसी लिये उन्होंने न बहुव्रीहौ सूत्र का आरम्भ किया है। अन्यथा बहुव्रीहि समास में सर्वादि के उपसर्जन होने के कारण उसी वचन से सर्वनामसंज्ञा न होती और वस्त्रान्तरवसनान्तरा में भी उसी वचन से निषेध सिद्ध था। यहां इस वचन को न मानते हुए ही बहुव्रीहिग्रहण का उक्त प्रयोजन बताया गया है।

आर्धधातुकत्वं यथा स्यात् । तेन 'ब्रुवो वचि' (सू २४५३) इत्यादि । 'एकाच:' किम् । पुनःपुनर्जागर्ति । 'हलादेः' किम् । भृशमीक्षते । भृशं शोभते रोचते इत्यत्र यङ नेति भाष्यम् । पौन:पुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' (वा १७५१) । आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । अनेकाच्कत्वेनाषोपदेशत्वात्षत्वं न । मोमूत्र्यते ।

## २६३१ । यस्य हलः । (६-४-४९)

'यस्य' इति सङ्घातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादा-

---

हारे' इति विहितलोडन्तमात्रविषयत्वात् । अत एव 'क्रियासमभिहारे लोट्' इति सूत्रभाष्ये "क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे वाच्ये" इत्येव पठितम् । पौन:पुन्ये यदि तु 'नित्यवीप्सयो' इति न द्वित्वम् । 'क्रियासमभिहारे द्वे' इत्यनेन पौन:पुन्येऽपि लोडन्तद्वित्वविधानेन पौन:पुन्यस्य अन्यतो लाभे सैनद्वित्वाप्रवृत्तेर्ज्ञापनादित्यलम् । **धातोः किमिति** ॥ 'क्रियासमभिहारे' इत्यनेनैव धातोर्लाभात्किमर्थं धातुग्रहणमिति प्रश्न । **आर्धधातुकत्वमिति** ॥ धातोरित्यभावे आर्धधातुकत्वञ्च स्यात् । धातोरिति विहितप्रत्ययस्यैव आर्धधातुकत्वादिति भाव । **ब्रुवः इति** ॥ यङ आर्धधातुकत्वे सत्येव तस्मिन् परे 'ब्रुवो वचि' 'चक्षिङो ख्याञ्' इत्यादि कार्यं सिध्यति । अन्यथा 'आर्धधातुके' इत्यधिकृत्य तद्विधानान स्यादिति भाव । **भृशमीक्षते इति** ॥ नच भृशशब्देनैवात्र भृशार्थभानात् यङ् न भविष्यतीति वाच्यम् । भृशत्व हि यङ्द्योत्यम्, नतु वाच्यम् । द्योतकश्च उक्तस्यापि सम्भवतीति भाव । **यङ् नेति** ॥ अनभिधानादिति भाष्ये स्पष्टम् । **पौन:पुन्ये त्विति** ॥ पुन:पुनश्शब्दसमभिहारेऽपि यङस्त्येव । भृशार्थ एवानभिधानोक्तेरिति भाव । **सूचिसूत्रीति** ॥ सूचि सूत्रि मूत्रि अटि अर्ति अशू ऊर्णोति एषान्द्वन्द्व । 'सूच पैशुन्ये, सूत्र वेष्टने, मूत्र प्रस्रवणे' एते त्रय श्चुराद्यन्तर्गणे कथादावदन्ता । तेषामनेकाच्त्वादप्राप्तौ यङ्वचनमित्याह । **आद्यास्त्रयः इति** ॥ 'अट गतौ, ऋ गतौ, अश भोजने, अशू व्याप्तौ' एषा हलादित्वाभावाद्वचनम् । ऊर्णुयस्तु हलादित्वाभावादेकाच्त्वाभावाच्च वचनम् । **सोसूच्यते इति** ॥ ण्यन्ताद्यङि णिलोपे द्वित्वे 'गुणो यङ्लुको' इति अभ्यासगुण । सूचे षोपदेशत्वभ्रम वारयति । **अनेकाच्कत्वेनेति** ॥ षोपदेशत्वे तु 'धात्वादे' इति षस्य सत्वे कृते आदेशसकारत्वादुत्तरखण्डस्य षत्व स्यादिति भाव । लिटि सोसूचि आमिति स्थिते । **यस्य हलः** ॥ यकारादकारस्य उच्चारणार्थत्वभ्रम वारयति । **सङ्घातग्रहणमिति** ॥ यकाराकारसमुदायस्येत्यर्थ । हल इति पञ्चमी । 'आर्धधातुके' इत्यधिकृतम् । 'अतो लोप' इत्यस्मात् लोप इत्यनुवर्तते । तदाह । **हल' परस्येत्यादिना** ॥ ननु 'अलोऽन्त्यस्य' इति यकारादकारस्य लोप स्यादित्यत आह ।

धेधातुके । 'आदेः परस्य' (सू ४४) । 'अतो लोपः' (सू २६०८) । सोसूचांचक्रे । सोसूचिता । सोसूत्रिता । मोमूत्रिता ।

२६३२ । दीर्घोऽकितः । (७-४-८३)

अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । अटाट्यते ।

२६३३ । यङि च । (७-४-३०)

अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि यङ्लुकि च । यकारपररेफस्य न द्वित्वनिषेधः । 'अरार्यते' इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते । बेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः । बेभिदिता ।

२६३४ । नित्यं कौटिल्ये गतौ । (३-१-२३)

गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते ।

---

**आदेः परस्येति** ॥ 'अलोऽन्त्यस्य' इत्यस्यायमपवाद इति भावः । **अतो लोपः इति** ॥ यकाराकारसङ्घाते यकारस्य लोपे सति परिशिष्टस्याकारस्य 'अतो लोप' इत्यर्थः । ननु मास्तु सङ्घातग्रहणम् । यकारस्यैवात्र लोपो विधीयताम् । अतो लोपे सति इष्टसिद्धिरिति चेन्न । ईर्ष्य्धातोस्तृचि इटि ईर्ष्यितेत्यत्र यकारलोपनिवृत्त्यर्थत्वादित्यलम् । अटधातो यङि 'अजादेर्द्वितीयस्य' इति ट्य इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ अटट्यते इति स्थिते । **दीर्घोऽकितः** ॥ **अभ्यासस्येति** ॥ 'अत्र लोपोऽभ्यासस्य' इत्यतस्तदनुवृत्तेरिति भावः । **यङि यङ्लुकि चेति** ॥ 'गुणो यङ्लुकोः' इत्यतस्तदनुवृत्तेरिति भावः । अकित इत्यस्य तु यंयम्यते इत्यादौ प्रयोजनं वक्ष्यते । ऋधातोर्यङि कृते ङित्त्वाद्गुणनिषेधे प्राप्ते । **यङि च** ॥ 'गुणोऽर्तिसंयोगाद्योः' इति सूत्रमनुवर्तते । 'रीङ् ऋतः' इत्यस्मात् ऋत इति च । तदाह । **अर्तेरित्यादि** ॥ तथा च ऋ य इति स्थिते ऋकारस्य गुणे अकारे रपरत्वे अर् य इति स्थिते 'न न्द्राः' इति रेफस्य द्वित्वनिषेधे य इत्यस्य द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घे अर्यायते इति प्राप्ते आह । **यकारपररेफस्येति** ॥ **भाष्योदाहरणादिति** ॥ 'धातोरेकाचः' इति सूत्रे इति शेषः । **अरारितेति** ॥ 'यस्य हलः' इति यकारलोपः । **अशाशितेति** ॥ अशधातोर्यङि श्य इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ 'दीर्घोऽकितः' इति दीर्घे 'यस्य हलः' इति यकारलोपः । **ऊर्णोनूयते इति** ॥ ऊर्णु य इति स्थिते 'न न्द्राः' इति नु इत्यस्य द्वित्वे हलादिशेषे अभ्यासदीर्घः । **बेभिद्यते इति** ॥ भिद् य इति स्थिते भिद् इत्यस्य द्वित्वे हलादिशेषे अभ्यासगुणः । ननु बेभिद्य इति यङन्ताल्लुटि तासि इटि यलोपे अतो लोपे बेभिदितेत्यत्र तासि परे लघूपधगुणः स्यादित्यत आह । **अल्लोपस्य स्थानिवत्त्वादिति** ॥ **नित्यं कौटिल्ये गतौ** ॥ नित्यशब्दः एवार्थे । कौटिल्ये इत्यस्योपरि द्रष्टव्यः । 'धातोरेकाचः' इत्यतो यङित्यनुवर्तते । तदाह । **गत्यर्थात्कौटिल्य एवेति** ॥ गत्यर्थवृत्तेर्धातो

एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः। गर्हितं जपति जञ्जप्यते इत्यादि।

## २६३९। ग्रो यङि। (८-२-२०)

गिरते रेफस्य लत्वं स्याद्यङि। गर्हितं गिलति जेगिल्यते। 'घुमास्था—' (सू २४६२)। इतीत्वम्। गुणः। देदीयते। पेपीयते। सेषीयते। 'विभाषा श्वे.' (सू २४७०)। शोशूयते। शेश्वीयते। 'यङि च' (सू २६३३)। सास्मर्यते। 'रीङृत' (सू १२३४)। चेक्रीयते। सुट्। सञ्चेस्क्रीयते।

## २६४०। सिचो यङि। (८-३-११२)

सिच. सस्य षो न स्याद्यङि। निसेसिच्यते।

## २६४१। न कवतेर्यङि। (७-४-६३)

कवतेरभ्यासस्य चुत्वं न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु चोकूयते।

---

**एषामिति** ॥ **इत्यादीति** ॥ जजम्यते। दन्दह्यते। दन्दश्यते। बम्भज्यते। पसधातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति माधवः। तालव्यान्त इति काशिका। **ग्रो यङि** ॥ गृ इत्यस्य ग्र इति षष्ठ्यन्तस्य वचनम्। 'कृपो रो लः' इत्यतः रो ल इत्यनुवर्तते। तदाह। **गिरतेरित्यादि** ॥ दा पा स्था एभ्यो यङि विशेषमाह। **घुमास्थेत्यादि** ॥ **शोशूयते इति** ॥ श्विधातोर्यङि 'सम्प्रसारणन्तदाश्रयञ्च कार्यम्बलवत्' इति वचनात् सम्प्रसारणे पूर्वरूपे शु इत्यस्य द्वित्वम् 'अकृत्सार्वधातुकयोः' इति दीर्घः। **सास्मर्यते इति** ॥ स्मृ य इति स्थिते संयोगादित्वात् 'यङि च' इति परत्वाद्गुणे रपरत्वे द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घः। **चेक्रीयते इति** ॥ कृ य इति स्थिते परत्वात् ऋकारस्य रीङादेशे क्री इत्यस्य द्वित्वे अभ्यासगुणः। **सुडिति** ॥ 'सम्परिभ्यां करोतौ भूषणे' 'समवाये च' इत्यनेनेति शेषः। **सिचो यङि** ॥ 'सहेः साडः सः' इत्यतस्स इति षष्ठ्यन्तमनुवर्तते। 'मूर्धन्य' इत्यधिकृतम् 'न रपरसृपि' इत्यतः नेत्यनुवर्तते। तदाह। **सिच. इति। निसेसिच्यते इति** ॥ 'उपसर्गात्सुनोति' इति 'स्थादिष्वभ्यासेन' इति च षत्वमनेन निषिध्यते। **न कवतेर्यङि** ॥ 'अत्र लोपः' इत्यतः अभ्यासस्येति 'कुहोश्चुः' इत्यतः चुरिति चानुवर्तते इति मत्वा आह। **कवतेरभ्यासस्येति** ॥ ननु कोर्यङि इत्येव सिद्धे श्तिपा निर्देशो व्यर्थ इत्यत आह। **कौतिकुवत्योस्त्विति** ॥ शपा निर्देशार्थं कवतिग्रहणम्। तेन 'कु शब्दे' इति लुग्विकरणस्य 'कुङ् शब्दे' इति शविकरणस्य च ग्रहणं न लभ्यते इति भावः। नच कोरित्युक्तेऽपि दीर्घान्तस्य शविकरणस्य न ग्रहणप्रसक्तिरिति शङ्क्यम्। तुदादौ 'कुङ् शब्दे' इति ह्रस्वान्तपाठस्य न्याय

**२६४२ । नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् । (७-४-८४)**

एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः । 'अकित' इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते । सनीस्रस्यते इत्यादि ।

**२६४३ । नुगतोऽनुनासिकान्तस्य । (७-४-८५)**

अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । नुका अनुस्वारो लक्ष्यते इत्युक्तम् । यंयम्यते–ययम्यते । तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । 'भाम' क्रोधे । बाभाम्यते । 'ये विभाषा' (२३१९) । जाजायते–जञ्जन्यते । 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' (वा ४६२१) । जेघ्नीयते । 'हिंसायां' किम् । जङ्घन्यते ।

**२६४४ । रीगृदुपधस्य च । (७-४-९०)**

ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः । वरीवृत्यते ।

---

सम्मतत्वात् । वस्तुतस्तु न्याससम्मते तौतादिकस्याप्रवृत्तिरेव फलम् । "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्" इति लुग्विकरणस्य ग्रहणनिवृत्तिरिति बोध्यम् । **नीग्वञ्चु** ॥ **अभ्यासस्येति** ॥ 'अत्र लोपः' इत्यतस्तदनुवृत्तेरिति भावः । **यङ्लुकोरिति** ॥ यङि यङ्लुकि चेत्यर्थः । **न दीर्घ इति** ॥ रीगागमात्प्राक् प्राप्तोऽभ्यासदीर्घो नेत्यर्थः । भविष्यदपि कित्त्वन्दीर्घप्रतिबन्धकमिति भावः । **नलोपः इति** ॥ 'अनिदिताम्' इत्यनेन नकारस्य लोप इत्यर्थः । **इत्यादीति** ॥ सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कन्द्यते । **नुगतोऽनु** ॥ अङ्गस्येत्यधिकृतम् । 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते । 'गुणो यङ्लुकोः' इत्यतः यङ्लुकोरिति च । तदाह । **अनुनासिकान्तस्येत्यादि** ॥ ननु ययम्यते इत्यत्र नुको नकारस्य अपदान्तत्वादझल्परकत्वाच्च कथं 'नश्च' इत्यनुस्वारः इत्यत आह । **नुकेति** ॥ नन्वभ्यासे ह्रस्वविधानाद्दीर्घस्याभावात् नुग्विधावत इति तपरकरणं व्यर्थमित्यत आह । **तपरत्वसामर्थ्यादिति** ॥ स्वाभाविकः एव यो ह्रस्वः अकारः तस्यैव ग्रहणम्, नतु दीर्घादेशभूतस्य ह्रस्वाकारस्येत्येतदर्थं तपरकरणमिति भावः । **बाभाम्यते इति** ॥ अत्र आकारस्थानिकस्य ह्रस्वविधिसम्पन्नस्य अकारस्य न नुगिति भावः । जनधातोर्यङि नकारस्य आत्त्वविकल्पं स्मारयति । **ये विभाषेति** ॥ **घ्नीभावः इति** ॥ यद्यपीह हीभावविधावपि 'अभ्यासाच्च' इति कुत्वे हकारस्य घकारः सिद्ध्यति । तथापि प्रयत्नलाघवाभावात् प्रक्रियालाघवाच्च घ्नीति घकारोच्चारणमिति भावः । **जेघ्नीयते इति** ॥ पुनः पुनरतिशयेन वा हिनस्तीत्यर्थः । अत्र यङीति विषयसप्तमी । यङि विवक्षिते सतीति लभ्यते । तेन द्वित्वस्य परत्वेऽपि प्रागेव घ्नीभाव इति बोध्यम् । **जङ्घन्यते इति** ॥ गर्हितं गच्छतीत्यर्थः । **रीगृदुपधस्य च** ॥ **अभ्यासस्येति** ॥ 'अत्र लोपः' इत्यत

क्षुभ्नादित्वान्न णः । नरीनृत्यते । जरीगृह्यते । उभयत्र ऌत्वम् । चलीक्लृप्यते । 'रीगृत्वत इति वक्तव्यम्' (वा ४६६२) । परीपृच्छ्यते । वरीवृश्च्यते ।

## २६४५ । स्वपिस्यमिव्येञां यङि । (६-१-१९)

सम्प्रसारणं स्याद्यङि । सोषुप्यते । सेसिम्यते । वेवीयते ।

## २६४६ । न वशः । (६-१-२०)

वावश्यते ।

## २६४७ । चायः की । (६-१-२१)

चेकीयते ।

---

तदनुवृत्तेरिति भावः । यङ्लुकोरिति ॥ 'गुणो यङ्लुकोः' इत्यतस्तदनुवृत्तेरिति भावः । वरीवृत्यते इति ॥ 'वृतु वर्तने' अस्माद्यङि द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रीक् । नृती यङि नरीनृत्यते इत्यत्र णत्वमाशङ्क्य आह । क्षुभ्नादित्वान्न णः इति ॥ जरीगृह्यते इति ॥ 'ग्रह उपादाने' अस्माद्यङि 'ग्रहिज्या' इति सम्प्रसारणे द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रीक् । उभयत्रेति ॥ कृपधातो यङि द्वित्वे उरदत्वे रपरत्वे हलादिशेषे रीक् । चलीक्लृप्यते इत्यत्र 'कृपो रो लः' इत्यभ्यासे रेफस्य लकारः । उत्तरखण्डे ऋकारस्यावयवो रेफस्तस्य लकारसन्देश इत्यर्थः । ननु व्रश्च्धातोर्यङि वरीवृश्च्यते इत्यत्र कथमभ्यासस्य रीक् । धातोः ह्यकारोपधत्वेन ऋदुपधत्वाभावादित्यत आह । रीगृत्वतः इति ॥ 'रीगृदुपधस्य' इत्यत्र ऋदुपधस्येत्यपनीय ऋवत इति वक्तव्यमित्यर्थः । ऋत् अस्यास्तीति ऋवत् । 'तसौ मत्वर्थे' इति भत्वात् पदत्वाभावान्न जश्त्वम् । परीपृच्छ्यते इति ॥ प्रच्छधातोर्यङि 'ग्रहिज्या' इति रेफस्य सम्प्रसारणमृकारः । पूर्वरूपं द्वित्वं रपरत्वं हलादिशेषः रीक् । वरीवृश्च्यते इति ॥ व्रश्चधातोर्यङि सम्प्रसारणे द्वित्वादि पूर्ववत् । स्वपिस्यमि ॥ सम्प्रसारणं स्यादिति शेषपूरणम् । 'ष्यङः सम्प्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः । सोषुप्यते इति ॥ स्वप्धातोर्यङि वकारस्य सम्प्रसारणे उकारे पूर्वरूपे द्वित्वे अभ्यासगुणः । उत्तरखण्डे सस्य षत्वम् । सेसिम्यते इति ॥ स्यमुधातोर्यङि यकारस्य सम्प्रसारणे पूर्वरूपे द्वित्वादि । अषोपदेशत्वान्न षः । वेवीयते इति ॥ व्येञो यङि यकारस्य सम्प्रसारणे पूर्वरूपे द्वित्वादि । 'हलः' इति वा 'अकृत्सार्वधातुकयोः' इति वा दीर्घः । अथ वशधातोर्यङि वावश्यते इत्यत्र 'ग्रहिज्या' इति सम्प्रसारणे प्राप्ते तन्निषेधं स्मारयति । न वशः ॥ वशधातोः छान्दसत्वम्प्रामादिकमिति प्रागेवोक्तम् । चायः की ॥ यङीति शेषः । 'स्वपिस्यमिव्येञां यङि' इत्यतस्तदनुवृत्तेरिति भावः । चेकीयते इति ॥ 'चायृ पूजानिशामन

## २६४८ । ई घ्राध्मोः । (७-४-३१)

जेघ्रीयते । देध्मीयते ।

## २६४९ । अयङ् यि क्ङिति । (७-४-२२)

शीङोऽयङादेशः स्याद्यादौ क्ङिति परे । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते । तोत्रौक्यते ।

इति यङन्तप्रकरणम् ।

---



श्रीरस्तु ।

# ॥ अथ तिङन्तयङ्लुक्प्रकरणम् ॥

## २६५० । यङोऽचि च । (२-४-७४)

यङोऽच्प्रत्यये लुक् स्याच्चकारात्त विनापि बहुलं लुक्स्यात् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । तत प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादय । 'शेषात्कर्तरि—' (सू २१५९) इति

---

अथ यङ्लुक्प्रक्रिया निरूप्यन्ते । **यङोऽचि च** ॥ अचि इति प्रत्ययग्रहणम् । नतु प्रत्याहार । यङा साहचर्यात् । 'ण्यक्षत्रियार्ष' इत्यत लुगित्यनुवर्तते । तदाह । **यङोऽच्प्रत्यये लुगिति । चकारात्तु विनापीति** ॥ अच्प्रत्ययाभावेऽपीत्यर्थ । **बहुलमिति** ॥ चकारात् 'बहुलञ्छन्दसि' इति पूर्वसूत्राद्बहुलग्रहणमप्यनुकृष्यत इति भाव । एवञ्च अच्प्रत्यये तदभावेऽपि यङो बहुलं लुगिति फलितम् । तेन लुनो यङन्तादचि यङो लुगभावपक्षे अतो लोपे लोलूय इति रूपम् । लुकि तु लोलुव इति रूप सिध्यति । तथा अच्प्रत्ययाभावेऽपि बो भूयते, बोभवीति, इत्यादौ यङो लुग्विकल्प सिध्यतीति बोध्यम् । **अनैमित्तिकोऽयमिति** ॥ अच्प्रत्ययादन्यत्र बोभवीत्यादौ यङ्लुक् अनैमित्तिक । ततश्च परस्मादपि द्वित्वादिकार्यात्प्रागेव अन्तरङ्गत्वाद्यङो लुक् भवति ततो द्वित्वादीति वस्तुत स्थितिकथनमिदम् । अच्प्रत्यये विधीयमानस्तु यङ्लुक् नैमित्तिकत्वाद्बहिरङ्ग एव । ततश्च परत्वान्नित्यत्वाच्च आदौ द्वित्वे कृते यङो लुकि अच्प्रत्ययमाश्रित्य प्राप्तो गुण 'न धातुलोप आर्धधातुके' इति निषेधान्न भवति । अच्प्रत्ययस्य यङ्लोपनिमित्तत्वादिति बोध्यम् । नन्वेवं सति यङ्लुकि 'सन्यङो' इति द्वित्वं न स्यात् । यङो लुका लुप्तत्वेन प्रत्ययलक्षणाभावादित्यत आह । **तत इति** ॥ यङो लुगनन्तरमित्यर्थ । 'न लुमता' इत्यनेन हि लुमताशब्देन लुप्ते तन्निमित्तमङ्गकार्यं निषिध्यते । द्वित्वादिकन्तु यङन्तस्य कार्यम्, नतु यङ्निमित्तकम् । यङि परतस्तद्विध्यभावादिति भाव । **द्वित्वमिति** ॥ नच 'एकाच' इति विधीयमानं द्वित्वद्वयमिह यङ्लुकि स्यात् । "श्तिपा शपा" इति निषेधादिति वाच्यम् । 'गुणो यङ्लुको' इत्याद्यभ्यासकार्यविधिबलेन द्वित्वनिषेधाभावज्ञापनादिति भाव । **अभ्यासकार्यमिति** ॥ गुणादीति भाव । **धातुत्वादिति** ॥ यङो लुकि सत्यपि प्रत्ययलक्षणमाश्रित्य यङन्तत्वात् 'सनाद्यन्ता' इति धातुत्वम् । नच 'न लुमता' इति निषेध शङ्क्य । धातुसंज्ञाया यङन्तधर्मत्वेन यङि परतोऽङ्गकार्यत्वाभावादिति भाव । यङो ङित्त्वात्तदन्तादात्मनेपदमाशङ्क्य आह । **शेषादिति** ॥ ननु 'शेषात्कर्तरि' इत्यत्र आत्मनेपदनिमित्तहीनो धातुश्शेष ।

परस्मैपदम्। 'अनुदात्तङितः—' (सू २१५७) इति तु न। ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि 'प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्'। अत एव सुदृषत्प्रासाद इत्यत्र 'अत्वसन्तस्य—' (सू ४२५) इति दीर्घो न। येऽपि स्पर्धशीडादयोऽनुदात्तङितस्तेभ्योऽपि न। 'अनुदात्तङित —' (सू २१५७) इत्यनुबन्धनिर्देशात्। तत्र च 'श्तिपा शपा—' (प १३२) इति निषेधात्। अत एव श्यन्नाद्यो न। गणेन निर्देशात्। किंतु शबेव। 'चर्करीतं च' इत्यदादौ पाठाच्छपो लुक्।

---

यङन्तधातुस्तु न तथा आत्मनेपदनिमित्त। ङकारानुबन्धसत्वादित्यत आह। **अनुदात्तङित इति तु नेति** ॥ कुत इत्यत आह। **ङित्त्वस्येति** ॥ तदेवोपपादयति। **यत्र हीति** ॥ यत्र प्रत्यये लुप्तेऽपि प्रत्ययमानवृत्तिधर्मपुरस्कारेण तमाश्रित्य कार्यप्रवृत्तिरिष्यते तत्रैव प्रत्ययलक्षणम्। यथा राजेत्यत्र। तत्र हि लुप्त सुप्प्रत्यय सुबात्मकप्रत्ययमात्रवृत्तिधर्मपुरस्कारेणाश्रित्य सुबन्ततया पदत्वात् 'नलोप' इति नकारलोपप्रवृत्ति। ङित्वन्तु न प्रत्ययमानधर्म। 'ऋते रीयङ' इत्यादिप्रत्ययेष्वप्रत्ययेष्वपि चित्रङादिषु सत्वात्। ततश्च यदि लुप्ते सति प्रत्ययलक्षणेन तमाश्रित्य तद्वृत्तिङित्त्वप्रयुक्तकार्यमात्मनेपदन शङ्कितु शक्यमिति भाव। ननु यत्किंचिद्धर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणकुतो नेत्यत आह। **अत एवेति** ॥ प्रत्ययमानवृत्तिधर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणाश्रयणादेवेत्यर्थ। **दीर्घो नेति** ॥ सु शोभना दृषद यस्य स सुदृषत्प्रासाद इत्यत्र समासावयवत्वाल्लुप्त जस प्रत्ययलक्षणेनाश्रित्य प्राप्त असन्तत्वलक्षणो दीर्घो न भवति। उणादीनामव्युत्पत्तिपक्षे व्युत्पत्तिपक्षे च असत्वस्य वेधा इत्यादावप्रत्यये प्रत्यये च सत्वेन प्रत्ययमात्रवृत्तित्वाभावेन तत्पुरस्कारेण दीर्घे क्रियमाणे प्रत्ययलक्षणासम्भवादिति भाव। एतत्सर्वं प्रत्ययलक्षणसूत्रभाष्यकैयटादिषु स्पष्टम्। नच सुदृषत्प्रासाद इत्यत्र जसो लुका लुप्तत्वात् 'न लुमता' इति निषेधादेव दीर्घो ▪ भविष्यतीति वाच्यम्। दीर्घस्यासन्तकार्यत्वेन जसि परे अङ्गकार्यत्वाभावादित्यलम्। ननु उक्तरीत्या प्रत्ययलक्षणाभावात् लुप्तयङन्तात् ङित्त्वप्रयुक्तमात्मनेपद मास्तु। ये तावत् स्पर्धादय अनुदात्तेत ये च शीङादयो ङित पठिता तेभ्य आत्मनेपद दुर्वारमित्यत आह। **येऽपीति** ॥ **तेभ्योऽपि नेति** ॥ तेभ्यो यङ्लुकि नात्मनेपदमित्यर्थ। कुत इत्यत आह। **अनुदात्तङित इत्यनुबन्धनिर्देशादिति** ॥ नन्वनुबन्धनिर्देशेऽपि यङ्लुकि आत्मनेपद कुतो न स्यादित्यत आह। **तत्र च श्तिपेति** ॥ न चानुबन्धनिर्देशादेव ङित्त्वप्रयुक्तमपि कार्यमात्मनेपद यङ्लुकि न भविष्यति। अत प्रत्ययासाधारणधर्माश्रयत्वे सत्येव प्रत्ययलक्षणमिति क्लेशानुभवो वृथेति वाच्यम्। यङो ङकारस्य प्रत्ययानुबन्धत्वेन यङन्तस्य धातोरनुबन्धेनानिर्देशादित्यलम्। **अत एवेति** ॥ "श्तिपा शपा" इति निषेधादेव यङ्लुकि श्यन्नादयो विकरणा नेत्यर्थ। "श्तिपा शपा" इति निषेधमुपपादयति। **गणेन निर्देशादिति** ॥ 'दिवादिभ्य श्यन्' 'रुधादिभ्य श्नम्' इत्यादिगणनिर्देशादित्यर्थ। **किंतु शबेवेति** ॥ 'कर्तरि शप्' इत्यत्र "श्तिपा शपा" इति निषेधाविषयत्वादिति भाव। **चर्करीतमिति** ॥

## २६५१। यङो वा।(७-३-९४)

यङन्तात्परस्य हलादे पित सार्वधातुकस्येड्वा स्यात् । 'भूसुवो —' (सू २२२४) इति गुणनिषेधो यङ्लुकि भाषाया न । '—बोभूतु तेतिक्ते' (सू ३५९६) इति छन्दसि निपातनात् । अतएव यङ्लुग्भाषायामपि सिद्ध । न च यङ्लुक्यप्राप्त एव गुणभावो निपात्यतामिति वाच्यम् । 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात्' (प १०१) । 'द्वि प्रयोगो द्विर्वचन षाष्ठम्' इति

---

यङ्लुगन्तमदादौ बोध्यमिति व्याख्यात प्राक । ‹ना य ्लुगन्ताच्छपो लुगित्यर्थं । एवञ्च भूधातोर्यङो लुकि द्वित्वादौ बोभू इत्यस्माल्लटि तिपि शपा लुकि बाभू ति इति स्थिते । **यङो वा** ॥ 'उतो वृद्धि ' इत्यतो हलाति 'नाभ्यस्तस्याचि' इत्यत पिति सार्वधातुके इति 'ब्रुव ईट्' इ‹त ईडिति चानुवनते । तदाह । **यङन्तादित्यादिना** ॥ टित्वादिय आद्यवयव ईट । तथाच ‹भू ई ति इति स्थिते ऊकारस्य गुणे अवादेशे बोभवातानि रूप वक्ष्यति । 'भूसुवोस्तिङि' इति गुणनिषधमाशङ्क्य आह । **भूसुवोरिति** ॥ **निपातनादिति** ॥ 'कृपे छन्दसि' इत्यत छन्दसीत्यनुवृत्ता 'दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते' इत्यादि सूत्रे भूधातो यङ्लुगन्तस्य गुणाभावो निपात्यत । 'भूसुवो ' इत्येव तत्र गुणनिषेधे सिद्धे गुणाभावनिपातनानि यमार्थम् । यङ्लुकि छन्दस्येवायम् 'भूसुवो ' इति गुणनिषेधो नान्यत्र इत्यतो लोकेऽपि यङ्लुगस्तीति विज्ञायत । एतेन 'यङोऽचि च' इति यङ्लुग्विधौ 'बहुल छन्दसि' इति पूर्व सूत्रा छन्दसीत्यनुवर्तयन्त पारस्ता । तदाह । **अतएव यङ्लुक् भाषायामपि सिद्ध इति** ॥ 'भूसुवोस्तिङि' इति सूत्रभाष्ये तु बोभूत्वित्येतनियमार्थम् । अतैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र । ‹ मा भूत् बोभवातीत्युक्तम् । अत्रैवेत्यस्य बोभूत्विति लोन्येवेत्यर्थ । यङ्लुगन्तस्येत्यस्य भूधातोरिति शय । बोभवीतीत्यवोदाहृतत्वादिति शब्देन्दुशेखरे प्रपञ्चितम् । वस्तुतस्तु भाष्ये यङ्लुगन्तस्येति सामान्याभिधानमेव । भूधातुमात्रसङ्कोचे माना भावात् । बोभवाति इत्युदाहरणन्तु धात्वन्तराणामपि प्रदर्शनपरमिति मूलकृदाशय । ननु भूधातोर्यङ्लुकि बोभू इत्यस्य 'भूसुवोस्तिङि' इति गुणनिषेधप्रसक्तिर्नास्ति । द्वित्वे सति यङ्लुगन्तस्य प्रकृत्यन्तरत्वेन भूरूपत्वाभावात् । ततश्च यङ्लुगन्तस्याप्राप्ते गुणाभावे तत्प्रापणपर्यनेव बोभूत्विति निपातनमिति युक्तम् । तथा च छन्दस्येव यङ्लुगन्तस्य गुणनिषेध, न तु भाषायामिति नियम कथ सिद्ध्येदित्याशङ्क्य निराकरोति । **नच यङ्लुकीति** ॥ **प्रकृतीति** ॥ 'प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणम्' इति परिभाषया 'भूसुवो ' इत्यत्र भूग्रहणेन बोभू इति यङ्लुगन्तस्यापि ग्रहणादित्यर्थं । ननु 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इत्यत्र किं प्रमाणमित्याशङ्क्य न्यायसिद्धमिदमित्याह । **द्विः प्रयोगः इति** ॥ षष्ठाध्यायादौ 'एकाचो द्वे प्रथमस्य' इत्यत किमिद द्विर्वचन एकाच प्रथमस्य एकस्य स्थाने द्वितयात्मक आदेश स्थान्यपेक्षया अन्यो विधीयते, उत स्थानिन एकस्य सत. द्विरुच्चारण विधीयते, नतु तत्स्थानिन‍ अतिरिच्यते, इति सशय्य 'द्वि प्रयोगो

